अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ ११
स कदाचित्समुद्रान्ते वसन्द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ १२
यत्तदुग्रं तपः कृष्ण चरन्सत्यपराक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ १३
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १४
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदुत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहरं रणे ॥ १५
स राजन्प्रीयमाणेन मयाप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १६
देवदानवगन्धर्वमनुष्यपतगोरगाः ।
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः ॥ १७
इदं धनुरियं शक्तिरिदं चक्रमियं गदा ।
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददानि ते ॥ १८
यच्छक्नोपि समुद्यन्तुं प्रयोक्तुमपि वा रणे ।
तद्गृहाण विनास्त्रेण यन्मे दातुमभीप्ससि ॥ १९
स सुनाभं सहस्रारं वज्रनाभमयस्मयम् ।
वव्रे चक्रं महाबाहो स्पर्धमानो मया सह ॥ २०
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम् ।

---

कल्याणीं, Ś$_2$ °णी, $K_{3.5}$ $D_2$ (by corr ) $T_2$ $G_{1.2}$ °णे, $B_1$ °णाच्, $M_{1-3}$ °णाल् —$^d$) Ś$_2$ शौर्यात् (for शोचन्) $K_{2.4.6}$ सन्यपतन् $\tilde{N}_1$ B Dn $D_{1-4.6.8}$ शोकात्पर्यचरन्महीं

11 $M_4$ om. 11 (cf v l 4) —$^a$) T $G_{1.2}$ $M_{1-3}$ कदाचित्स नरश्रेष्ठ —$^b$) $M_1$ नवस्थे —$^c$) $K_3$ न्यवसं (for अवसद्) Ś$_1$ द्वारिकाम् Cd cites एत्य (as in text) —$^d$) $Dn_2$ सर्वदार्चित

12 $M_4$ om 12 (cf. v l 4) —$^b$) Ś$_2$ $K_{1.3.5}$ स्थित, $K_{2.4.6}$ भृश (for वसन्) —$^c$) $K_5$ एव, $G_2$ एक (for एकं) $T_1$ समागत्य

13 $M_4$ om 13 (cf v l 4) —$^a$) $K_3$ $Dn_2$ कृत्वा (for कृष्ण) —$^b$) $Dn_2$ कृष्ण (for चरन्) $Dn_1$ $D_8$ -पराक्रम T $G_{1.2}$ $M_{1-3}$ चरन्नमितविक्रम (G$_1$ °म, $G_2$ $M_{1.3}$ °म) —$^c$) $K_3$ अगस्ति; $Dn_1$ आगस्त्यो Ś$_2$ $K_3$ $Dn_2$ $D_{1-4}$ $G_{1.2}$ $M_3$ भरताचार्ये

14 $M_4$ om 14 (cf v l 4) —$^b$) $D_{1.2}$ सेवित (for -पूजितम्) —$^c$) $K_1$ तमद्य $K_3$ यद्दिव्यमपि दाशार्ह

15 $M_4$ om 15 (cf. v l 4) —$^a$) $K_3$ अस्मात्त्व तदुपादाय, $Dn_1$ अस्मात्तत्त्वमुपा°; $Dn_2$ अस्मत्तत्समुपा°, $G_1$ अस्मत्तत उपा° —$^b$) T $G_{1.2}$ $M_{1-3}$ दिव्यमस्त्रविदा वर —$^d$) Ś$_2$ रिपुहरन्, $K_{3.5.6}$ $\tilde{N}_1$ B Dn $D_{1-4.8}$ T $G_1$ रिपुहण

16 $M_4$ om 16 (cf. v l 4) —$^a$) $T_2$ $G_{1.2}$ प्रियमाणेन —$^b$) Ś$_1$ $K_{1.4}$ मया ह्युक्त, $K_5$ मयेत्युक्त, $\tilde{N}_1$ मयाभ्युक्तः $K_3$ मया ह्येष कृताञ्जलिं —$^d$) $K_3$ भरतर्षभ $K_1$ मत्तो भरतसत्तम

17 $M_4$ om 17 (cf v l 4) —$^a$) $T_1$ गधर्वा —$^b$) $K_6$ पतगौरगा —$^c$) $K_4$ यमवीर्यस्य $K_6$ न समामवतीर्यस्य —$^d$) $K_{2.5}$ Dn $D_4$ पीडिता, $B_1$ T $G_{1.2}$ $M_1$ पंडिता, Cd पिण्डिता (as in text)

18 $Dn_1$ $M_4$ om 18 (for $M_4$, cf v l. 4) —$^a$) T $G_{1.2}$ इद चक्रम् (for इय शक्तिर्) —$^b$) $D_8$ इय (for इदं) $D_6$ इद (for इयं) T $G_{1.2}$ इय शक्तिरिय गदा —$^c$) T $G_{1.2}$ $M_{1-3}$ नामास्त्र (for चेदस्त्र) $K_3$ यस्येच्छा तव चास्त्रेषु —$^d$) $K_4$ तत्ते (for तत्तद्) $K_{2.4-6}$ $\tilde{N}_1$ B (except $B_3$) $Dn_2$ $D_{1-3}$ T $G_{1.2}$ $M_3$ ददामि $K_3$ तदस्त्रं ते ददाम्यह

19 $M_4$ om 19 (cf v l 4) —$^a$) Ś$_2$ $D_4$ यच्छक्नोसि, $D_{1.8}$ °ति Ś$_2$ $K_{1.3}$ सुमुद्धर्तुं; $D_{1.2}$ समुद्यातु, $M_1$ तमुद्यंतुं —$^b$) Ś$_1$ °योक्तुमसि $Dn_2$ प्रयोक्तु वापि वा रणे —$^c$) $Dn_2$ एतद्गृण —$^d$) Ś$_2$ $K_{2.4.6}$ अभीच्छसि, $D_6$ अधीप्ससि, T $G_{1.2}$ $M_{1-3}$ इहेच्छसि $K_5$ यत्सारमुपलप्स्यसि, $Dn_1$ यन्मा तातमभीप्ससि

20 $M_4$ om 20 (cf v l 4) —$^a$) Ś$_1$ $K_1$ रस नाभ, $K_{2.4.6}$ अस्त्र नेमि, $G_1$ $M_1$ वसुनाभ $K_1$ सहस्राभं (for °र) Ś$_1$ द्रौणिना त सहस्रार्धं —$^b$) $K_5$ $K_3$ वज्रधारम्; $G_1$ °सारम् Ś $K_1$ अयोमय, $\tilde{N}_1$ B Dn अयोमुख $Dn_1$ वज्रनाभोपम स्वय —$^c$) $\tilde{N}_1$ B Dn $D_{1-3.6.8}$ T $D_{1-4.6.8}$ महाभागो —$^d$) $G_{1.2}$ $M_{1-3}$ मत्त स्पर्धन् (for स्पर्धमानो)

21 $M_4$ om 21 (cf v l 4) —$^a$) $Dn_2$ ततम्

जग्राहोपेत्य सहसा चक्रं सव्येन पाणिना ।
न चैतदशकत्स्थानात्संचालयितुमच्युत ॥ २१
अथ तद्दक्षिणेनापि ग्रहीतुमुपचक्रमे ।
सर्वयत्नेन तेनापि गृह्णन्नैतदकल्पयत् ॥ २२
ततः सर्वबलेनापि यच्चैतन्न शशाक सः ।
उद्धर्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ।
कृत्वा यत्नं परं श्रान्तः स न्यवर्तत भारत ॥ २३
निवृत्तमथ तं तस्मादभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य सुस्निग्धमश्वत्थामानमब्रुवम् ॥ २४
यः स देवमनुष्येषु प्रमाणं परमं गतः ।
गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ २५
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वंद्वयुद्धे पराजिष्णुस्तोषयामास शंकरम् ॥ २६
यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
नादेयं यस्य मे किंचिदपि दाराः सुतास्तथा ॥ २७
तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा ।
नोक्तपूर्वमिदं वाक्यं यत्त्वं मामभिभाषसे ॥ २८
ब्रह्मचर्यं महद्घोरं चीर्त्वा द्वादशवार्षिकम् ।

---

(for चक्रम्) Ś1 ट्र्युक्ते — ᵇ) T G1, 2 M1-3 स मया (G1 समयं) (for मया तु) K3 मया स द्रौणिरु त्तम, Ñ1 मया दत्त तदन्तर — ᶜ) K3 6 Ñ1 B Dn D1-4 6 8 [उ]त्पत्य K5 G2 तरसा (for सहसा) K3 जग्राह सहसा चैव — ᵉ) K2-4, 6 B Dn2 D4 6 8 T G1 2 M1-3 एनम्; Dn1 एवम्, D1-3 एकम् (for एतद्) — ᶠ) Ñ1 उच्चालयितुम्, T G1 2 M1-3 प्रचाल° Ś1 (*sup lin*) K2-6 Ñ1 B (except B1 5) Dn T G2 M1 अप्युत

22 M4 om. 22 (cf v l 4) — ᵃ) Ś1 तथैतद्; K3 4-6 Ñ1 B Dn D1-4 6 8 T G1 2 M1-3 अथैनं; K3 तथैव, Text as in Ś1 K1 — ᵇ) K3 5 6 Ñ1 B Dn D1-4 T2 M1 2 गृहीतुम् — ᶜ) T1 सर्वं (for सर्वं) K5 स चापि (for तेनापि) K2 4 6 उभाभ्यां यत्नतो वापि, B (except B3, 5) Dn1 D1-3 सर्वयत्नयत्ने नापि —After 22ᵉ, D6 repeats 22ᵇᶜ — ᵈ) K2 4 6 ग्रहीतुं नैव शक्तवान् (K6 शक्तिमान्), K3 गृह्णन्नेद सर्कंपयन्; K5 B1-3 गृह्णन्नैतद (B3 °नम )कंपयत्; Ñ1 क्षेसदकंपस; B4 5 Dn1 D1-4 8 गृह्णन्नेवमिद तत°; Dn2 D6 गृह्णन्नै (D6 ह्णन्ने )वमकंपयत्, T G1, 2 M1-3 गृह्य (M1 गृह्णन्) नैनमकपयत्, Text as in Ś1 K1

23 M4 om 23 (cf v l 4) — ᵇ) K1 यच्चैतन्; K2 Dn1 यदै (Dn1 दे )व, K4-6 Ñ1 B Dn2 D1-4 6 8 T G1 2 यदैन, K3 यच्चैनं, M1 यदेतान्, M2 3 यदै तन् (for यच्चैतन्) K2 4-6 Ñ1 B (except B3) Dn D1-4 6 8 ह (for स°) K3 यत्नेन सुसमाहित° — ᶜ) K3-6 Ñ1 B1 2 4 5 Dn D3 4 6 8 M1-3 उद्यतु, B3 D1 2 उद्यंत; text as in Ś1 K1 Cd T G1 2 उद्यतु (G1 त ) च्चालयित्वापि — ᵉ) K1 Ñ1 B2-5 Dn D1-4 6 8 M2 परिश्रांत°; K3 पर श्रांतं; K6 परश्रांत — ᶠ) K4 स (for स)

24 M4 om 24 (cf v l 4) — ᵃ) K2 4-6 Ñ1 B Dn D1-4 8 T G1 2 M2 3 निवृत्तमनस, K3 M1 निवृत्त (K6 वत्तं )मनसस्; D6 निवृत्तमनसा, text as in Ś K1 — ᵇ) K1 M1 2 अचेतसं, K3 विचेतस° — ᶜ) K5 चोचैस्तम्, K6 Ñ1 B (except B3) Dn D3 4 6 8 संविग्नम्, D1 2 सविग्नम् (for सुस्निग्धम्) — ᵈ) K5 M1 2 अब्रव

25 M4 om 25ᵃᵇ (cf v l 4) — ᵃ) K3 च (for स) K5 6 Ñ1 B5 Dn1 D1-3 T1 दैव° (for देव ) — ᶜ) K4 गांजीवधन्वा — ᵈ) K6 °मकरकेतन°

26 ᵇ) K3 4 शितिकंठम्; K5 सित°; T1 G1 2 M नीलकंठम् — M4 om 26ᶜ–27ᵇ — ᶜ) K1 4 5 Dn2 D6 8 पुरा जिष्णुस्, Dn1 परो जिष्णुस्

27 M4 om 27ᵃᵇ (cf v l 26) — ᵃ) T G1 2 M1-3 तस्मात् — ᵇ) K4 6 न मान्य° — ᶜ) K1 D8 न देयं K4 T G1 2 तस्य; M4 कस्य (for यस्य) T1 ते (for मे) — ᵈ) K4 सुतस्तथा T G1, 2 M अपि प्राणा (M3 4 °णान्) महात्मन°

28 ᵈ) K2 यस्त्व K3 यस्तत्वमिह याचसे, T G1 2 M यत्त्व मत्तोभिमन्यसे (T1 °भाषसे)

29 ᵃ) K3 B5 D3 महावीर, K5 पुनर्घोर, Dn2 अह घोर — ᵇ) Ś1 K1, 2 4-6 B2 4 5 Dn D1-4 6 8 तीर्त्वा, Ñ1 तीर्ये, B1 चीर्णो, B3 कृत्वा (for चीर्त्वा) T G1 2 M चरित्वा द्वादशाब्दिक — ᶜ) T G1 2 M पादम् (for °पार्श्वम्) K1 मत्येत्य, Ñ1 B4 Dn1 D1-3 आस्थाय — ᵈ) Ś1 T G1 2 जित°, K2-6 Ñ1 B Dn D1-4 6 8 M1-3 [अ]जित°; M4 [अ]जितं; Text as in Ś1 K1

हिमवत्पार्श्वमभ्येत्य यो मया तपसार्चितः ॥ २९
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत ।
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ३०
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं मम ।
न प्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया ॥ ३१
रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन ।
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ॥ ३२
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं जातु यदिदं प्रार्थितं त्वया ॥ ३३
भारताचार्यपुत्रः सन्मानितः सर्वयादवैः ।
चक्रेण रथिनां श्रेष्ठ किं नु तात युयुत्ससे ॥ ३४
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह ।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वयेत्युत ॥ ३५
ततस्ते प्रार्थितं चक्रं देवदानवपूजितम् ।
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ३६
त्वत्तोऽहं दुर्लभं काममनवाप्यैव केशव ।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ ३७
एतत्सुनाभं वृष्णीनामृषभेण त्वया धृतम् ।
चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥ ३८
एतावदुक्त्वा द्रौणिर्मां युग्यमश्वान्धनानि च ।

---

30 [a]) K1 °व्रतचारिण्या, K2 4 5 °ब्रह्मचारिण्या —[b]) M रुग्मिण्यां K6 Ñ1 योनुजायते; Dn2 T G1. 2 M यो न्य(G1 [ऽ]श्य; M2 [ऽ]प्य)जायत; Dn1 योत्स्वयायत (sic) —[c]) K4 स मत्कुमारस्, D6 स तस्कुमारस्, Cd सनत्कु° (as in text) —[d]) Dn1 ते (for मे) Ś1 K1 प्रद्युम्नेन समस्तत

31 [a]) T G2 तन् (for [ए]तन्) K1 Dn2 M1 महा दिव्य —[b]) Dn रणे, M1 2 4 महत्, M8 मत (for मम) —[c]) B2 महन् (for अभून्) —[d]) T G1 2 M तदिदं K6 मया (for त्वया)

32 Ś1 K1 M8 om (hapl.) 32, K5 D2 read it in marg (sec m) —[a]) Ś2 K5 रामेणापि T G1 2 M (M8 om) [ए]व (for [ए]तन्) —[c]) Ś2 नगेन (for गदेन) K4 5 B3 4 D4 शांबेन —[d]) T2 G1, 2 M (M8 om) तदिद

33 K5 Dn2 om (hapl) 33 —[a]) Ś2 द्वारिका° T G1 2 M चैव (for चान्यैर्) —[c]) K8 यत्तु; T G1 2 M क्षुद्र (G1 M1 °त्र) (for जातु) —[d]) Ś K1 यदद्य, T G1 2 M तदिद

34 [a]) K3 5 T1 G1 2 M3 भरता° K8 पुत्रासि, Ñ1 B1 5 Dn D1-4 6 8 -पुत्रस्त्व, T G1 2 पुत्रस्तु, M4 पुत्र स —[c]) Ś2 K1 श्रेष्ट; D6 श्रेष्ट —[d]) Ś2 K1 किं न, K3 5 B Dn2 D1-4 6 कं नु, Ñ1 कस्मात्, T G1 M1 3 क त्वं, G2 कं तु, M4 त त्वं (for किंनु as in Ś1 Dn1 D8) K8 जात K5 युयुत्ससि, M4 °त्सवे K2 4 6 किं करिष्यसि नो द्विज — After 34, K2 4 ins

60* धारणे न समर्थस्त्व कुतः क्षेप्तु महाहवे ।

35 [c]) D1-8 प्रपूज्य Cd भवते (as in text) —[d]) K8 यास्ये S2 K8 त्वयाच्युत (K8 °त), K1 त्वयेति ह, K4 त्वयैच्युत, B (except B8) Dn D1-4 6 त्वया सह; G1 त्वया त्विति

36 [a]) Ñ1 ततोस्म (for ततस्ते) K2-4 6 B Dn D1-4 6 8 T G1 2 M प्रार्थितं से मया चक्र (B8 ततश्चक्र; Dn2 महच्चक्र) —[b]) D8 °पूजन, D6 °पूजित —[c]) M2 स्यादिति

37 [a]) B1 2 हि (for अह) K2-4 6 T G1 2 M सोहं ते (T G1. 2 M तद्) दुर्लभ चक्रम् —[b]) K8 च (for [ए]व) —[c]) D8 प्रीतिं (for प्रति)

38 [a]) K6 B (except B8) Dn D1-4 6 8 सुभीम (for सुनाभ) K6 B1 5 Dn D1-4 6 8 भीमानाम्; Ñ1 भौमानाम्, B1-8 भैमानाम्, T G1 2 M भोजानाम् (for वृष्णीनाम्) K1 एतत्सुनाभमृष्णीनाम् —[b]) Ś1 वृषभेण K5 6 हृतम्, D4 वृत —[c]) K5 अप्रतिम चैव —[d]) K1 भुवो K1 विपद्यते, K8 प्रपद्यते; B1 2 हि विद्यते; D6 निपद्यते K6 भुवनान्यतिपद्यते, T G1 2 M भवत्येवो(M °तैवो)पपद्यते

39 [a]) K8 तु; D6 M2-4 मा (for मां) —[b]) Ś2 युग्यम्, K2 4-6 Ñ1 B Dn D1-4 6 8 T G1 2 M Cd युग्यान्, K8 युगान्, K5 प्रयुज्य (for युग्यम्) Ñ1 बलानि (for धनानि) K2, 4 6 ययौ पश्चाद्धनानि च (K6 वना इव) — K4 6 om (? hapl.) 39[cd] —[c]) K2 B Dn K3 5 T G1 2 M प्र (for [उ]प) K2 B Dn D1-4 6 8 काले (for घालो) —[d]) M3 4 [उ]त (for च)

आदायोपययौ बालो रत्नानि विविधानि च ॥ ३९
स संरम्भी दुरात्मा च चपलः क्रूर एव च ।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ४०

इति श्रीमहाभारते सौप्तिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

# १३

वैशंपायन उवाच ।
एवमुक्त्वा युधां श्रेष्ठः सर्वयादवनन्दनः ।
सर्वायुधवरोपेतमारुरोह महारथम् ।
युक्तं परमकाम्बोजैस्तुरगैर्हेममालिभिः ॥ १
आदित्योदयवर्णस्य धुरं रथवरस्य तु ।
दक्षिणामवहत्सैन्यः सुग्रीवः सव्यतोऽवहत् ।
पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ २
विश्वकर्मकृता दिव्या नानारत्नविभूषिता ।
उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ॥ ३
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् ।
तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ॥ ४
अन्वारोहद्धृषीकेशः केतुः सर्वधनुष्मताम् ।
अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ ५
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ ।

40 a) $K_{2.4}$ सुसरंभी, M संरंभी च $D_{1-3}$ दुरा चारश्च — b) $K_1$ क्रूरश्चपल (by transp) — c) $K_3$ $G_1$ $M_1$ शास्त्रं (for चास्त्रं) — d) $K_4$ रक्ष $K_{2.4.6}$ वृकोदरं

Colophon — *Adhy name* $Ś_1$ (with श्री) $_2$ $K_1$ कृष्णवाक्यं, $K_4$ द्रौणिवृत्तोपवर्णनं; $M_{1.3.4}$ चक्रप्रार्थनं ($M_4$ प्रस्थान) — *Adhy no* (figures, words or both) $Ś_2$ (orig) 10, $Ś_2$ (by corr) $D_2$ (marg sec m) 12 (as in text), $Ñ_1$ Dn T $G_{1.2}$ M 3

## 13

1 a) $K_{3.4.6}$ यदुश्रेष्ठ, $Ñ_1$ युधां श्रेष्ठं; $D_4$ युधि श्रेष्ठ, T $G_{1.2}$ M कुरुश्रेष्ठं ($G_1$ °ष्ठ) Ca. d cite युधां (as in text) — c) $D_{1.2}$ (orig) रथोपेतम्; $D_2$ (by corr) $_6$ -वरोपेतम् — d) $K_{2.4.6}$ $B_{4.5}$ Dn $D_{1-4.6.8}$ T $G_{1.2}$ M रथोत्तम; $K_3$ महारथ — e) $Ś_1$ $K_1$ $T_1$ $G_1$ -काम्भोजैस्, $Dn_1$ कैंबोजैस् (sic) — f) $T_2$ $G_{1.2}$ M देशजैर् (for तुरगैर्)

2 a) $Dn_1$ $D_{1.2}$ वर्णश्च T $G_{1.2}$ M उदितादित्य संकाश — b) $K_3$ $Ñ_1$ $B_{1.2}$ च (for तु) T $G_{1.2}$ M सर्वरत्नविभूषितं — c) $Ś_1$ दक्षिणां त्ववहत्, $K_1$ दक्षिण तु वहत्, $K_{2.4}$ $Ñ_1$ °णेनावहत्, $K_3$ $M_{1.3}$ °णं चावहत्, T $G_2$ °णेस्यावहत् $K_2$ सैव्य°, $K_{5.6}$ B Dn $D_{1-4.6.8}$ शैब्य°, $G_2$ सैन्यं — d) $Ś_1$ $K_1$ [ऽ]प्रहीत्, $K_{3.8}$ $Ñ_1$ B Dn $D_{1-3.6.8}$ [ऽ]भवत्, T $G_{1.2}$ धुर (for ऽवहत्) — e) $Ś_1$ $G_{1.2}$ प्रार्ष्टिवाहौ; $K_3$ पार्श्व वाहौ, $K_4$ तूर्ष्णिवाहौ (sic), $D_{1.2}$ पार्ष्णिग्राहौ, $M_1$ पृष्ठवाहौ, $M_2$ प्राष्टि; $M_3$ प्राष्ठ्य°, $M_4$ पार्ष्टि T $G_{1.2}$ M च (for तु) $K_5$ पार्ष्णिवाहौ ततस्त्वास्तां, $Ñ_1$ हौ सुतस्यास्तां — f) $K_2$ बळाहकौ, $G_2$ M -वलाहकौ

3 $K_1$ श्लेषा, T $G_{1.2}$ [आ]पीडा; M माया (for दिव्या) — b) $Ś_2$ नानाधातु, $Ñ_1$ मनोरत्न, B Dn $D_{1-4.6.8}$ रत्नधातु, $M_{1.2}$ सर्वरत्न $K_6$ $D_{1.2}$ विचित्रिता — c) Ś श्रितेव च रथे ($Ś_2$ चरते) माया; $K_1$ श्रिते रथवरे माया, $K_3$ दीप्तेव च रथे माया; $K_3$ स्थितेवाचिर मोयासौ (sic), $K_{4-6}$ दीप्ते वररथे माया, $Ñ_1$ मूर्तेव च रथेशाया (sic), $Dn_2$ $D_4$ उच्छ्रिते च रथे माया; T $G_{1.2}$ M उच्छ्रिता च रथे तस्मिन् — d) $K_5$ ध्वजयष्टिर्न दृश्यते; $K_3$ ध्वजहृष्टिरदृश्यते (sic)

4 $Ś_1$ $K_{1.6}$ om (hapl.) 4 — a) $D_3$ तदा तस्या, $G_1$ स्थितस्तस्यां $D_{1.2}$ °तेयध्वजे तस्य — b) $Ñ_1$ M -लरश्मिमान्, $D_{1-3}$ °मण्डलमाविशत् — c) $B_{1.2}$ तत्र तस्य°, $G_{1.2}$ $M_{1-3}$ तस्य तस्य, $M_4$ तस्य तस्य° — d) $K_5$ भुजंगारिर् $K_2$ स भुजगारि दृश्यते

5 a) $K_{3.4.6}$ $Ñ_1$ Dn $D_{1-3}$ अथारोहद्, $K_3$ अन्वारो° $K_3$ हृषीकेशात्, $K_5$ °केशं T $G_{1.2}$ M अन्वा-

रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ॥ ६
तावुपारोप्य दाशार्हः स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान्परमाश्वानचोदयत् ॥ ७
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥ ८
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ॥ ९
ते समार्छन्नरव्याघ्राः क्षणेन भरतर्षभ ।
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः ॥ १०
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम् ।
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ॥ ११
स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम् ।
ययौ भागिरथीकच्छं हरिभिर्भृशवेगितैः ।
यत्र स्म श्रूयते द्रौणिः पुत्रहन्ता महात्मनाम् ॥ १२
स ददर्श महात्मानमुदकान्ते यशस्विनम् ।
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह ॥ १३
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
रजसा ध्वस्तकेशान्तं ददर्श द्रौणिमन्तिके ॥ १४
तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १५
स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ ।

---

स्रोह कृष्ण तु ($G_1$ °ष्णस्य, $M_{1\ 2}$ °ष्णस्तु) — b) $M_4$ धनुर्भृता — c) T $G_2$ M अर्जुन स च धर्मात्मा

6 a) $K_8$ अशोभता T $G_{1\ 2}$ M शुशुभाते तु तौ वीरौ — $D_8$ om (hapl) from $6^{b}$ up to रोप्य (in $7^{a}$) — d) $\tilde{N}_1$ अश्विभ्यामिव

7 $D_8$ om up to रोप्य (cf v l 6) $D_4$ om $7^{a}$–$9^{a}$ — a) $Ś_2$ तावुभौ रोप्य, $K_{1\ 2}$ तावथा रोप्य, $K_4$ तावप्यारोप्य, $Dn_1$ तावुपामन्त्र्य, T $G_3$ उभावारोप्य, M स तावारोप्य $T_2$ दाशार्हं, $G_1$ °र्हं, $M_1$ गोविंद ; $M_2$ गोविद — b) $K_{2-4}$ स्यदनं $K_{2-4\ 6}$ लोकपूजिते, T $G_{1\ 2}$ M भरतर्षभ — c) $\tilde{N}_1$ ययान्यस्तान् (for जवोपेतान्) — d) $K_5$ त्वरन्नश्वान्, $M_4$ तूर्णमश्वान् $K_{2-5}$ अनोदयत्

8 $D_4$ om 8 (cf. v l 7). — a) $Dn_2$ सहसा पेतुर्, T $G_{1\ 2}$ M त्वरिता जग्मुर् — b) T $G_{1\ 2}$ M वहंतस्त ($T_1$ °स्तु) रथोत्तम — d) $Ś_1$ $B_1$ $D_1$ ऋषभेन

9 $D_4$ om $9^{a}$ (cf v l 7) — b) $Ś_2$ शीघ्रचारिणा, $\tilde{N}_1$ $B_{1\ 2}$ °सारिणां — c) $Ś_2$ $K_8$ $T_1$ महाशब्द

10 a) $K_8$ समागच्छन्, $Dn_2$ तेजसार्छन् (for ते समार्छन्) T $G_{1\ 2}$ M ते समर्थं महाबाहु — b) $M_{1\ 2}$ भरतर्षभ $Ś_2$ $K_{2-6}$ $\tilde{N}_1$ क्षणेनैव ($\tilde{N}_1$ °न च) नरर्षभ ($K_{2\ 3}$ °भा, $K_4$ $\tilde{N}_1$ °भ, $K_6$ °महर्षभ) — c) $K_{2-4\ 6}$ नरव्याघ्र ($K_6$ °घ्र), T $G_{1\ 2}$ $M_{1\ 2}$ महात्मानम्, $M_{3\ 4}$ महाबाहुम् (for महेष्वास) — d) $K_{2\ 4\ 6}$ समभिद्रुत्य, $K_8$ समनुसत्य; T $G_{1\ 2}$ M अनुसत्य सु ($M_4$ स-) $K_1$ वाजिन, $K_6$ वेगत

11 $K_1$ om (hapl) $11^{a}$–$12^{d}$ — a) $\tilde{N}_1$ क्रोधाविष्ट, $Dn_2$ कोपदीप्त $B_{1\ 2}$ च (for तु) — c) $D_6$ धारयितु T $G_{1\ 2}$ M न स्म वारयितु शक्ता (M शेकु) — d) $K_{2-4}$ $M_2$ समेतापि, $K_5$ ते सर्वेपि, $M_1$ समेता हि

12 $K_1$ om $12^{abcd}$ (cf v. l. 11) — a) $\tilde{N}_1$ तेषा समप्रेक्ष्यतामेव, $Dn_2$ तेपा तु प्रेक्षतामेव, T $G_{1\ 2}$ M स तेषामग्रत शूर ($T_2$ °रे, $M_2$ °र) — b) $Ś_2$ $K_{2\ 4-6}$ क्रोशतां, $Dn_2$ धीमता (for श्रीमता) $D_6$ चैव (for दृढ-) — $Dn_2$ om (hapl) $12^{cdef}$ — c) $K_2$ $D_8$ भागीरथं (for °रथी) $K_4$ -कच्छे, $K_5$ कक्ष, $K_6$ $Dn_1$ $D_{1\ 2}$ -तीरं, $D_8$ तीरे — d) $B_{1,2}$ $D_3$ भृशवेगिभि, T $G_{1\ 2}$ M हेममालिभि $K_2$ हरिभीर्भृतवेगीतै $C_a$ d cite हरिभि (as in text) — e) $K_1$ सं, T $G_{1\ 2}$ M स (for स्म) $K_6$ द्रोणि — f) $K_5$ महायल, T $G_{1\ 2}$ M दुरात्मवान्

13 $K_{4\ 6}$ om $13^{b}$–$17^{e}$ — c) $M_4$ °द्वैपायन

14 $K_{4\ 6}$ om 14 (cf v l. 13) — a) $Ś_1$ $K_1$ तं चैन; $D_8$ $G_2$ तथैव $T_1$ क्रूव (for क्रूर) — b) $K_8$ $D_6$ कृतात, $G_2$ प्रवात; $M_1$ भृशार्तं (for घृताक्त) $K_1$ कुशरीरिण, $K_8$ °धारिण, $D_8$ °चीरिणा — c) $K_{2\ 3}$ B Dn $D_{1-4\ 6\ 8}$ ध्वस्तमासीन T $G_{1\ 2}$ M रजोध्वस्तमुपासीन — d) $Ś_2$ Dn $D_6$ अतके, $K_2$ अंतिकात् T $G_{1\ 2}$ M ददर्श भरतर्षभ

15 $K_{4\ 6}$ om 15 (cf v l. 13) — b) $Ś_2$ प्रतिगृह्य शर धनु

व्यथितात्मामवद्द्रौणिः प्राप्तं चेदममन्यत ॥ १६
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ।
जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना ।
स तामापदमासाद्य दिव्यमस्त्रमुदीरयत् ॥ १७
अमृष्यमाणस्तान्शूरान्दिव्यायुधधरान्स्थितान् ।
अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः ॥ १८
इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ।
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ १९
ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्तकयमोपमः ॥ २०

इति श्रीमहाभारते सौप्तिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

# १४

वैशंपायन उवाच ।
इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १
अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते ।

---

16 K4 6 om 16 (cf v l 13) — a) T G2 M सं (for स) T G1 2 M भीमकर्माण — G1 om $16^{bc}$ — b) D6 प्रगृह्य म शरा — Portion of the text from 10 13 $16^{e}$ up to 10 15 $22^{b}$ is missing in Ñ1 — c) Ś1 K1 पृष्ठतो भ्रातरश्चा(K1 °रौ चा)स्य, K2 भ्रातर पृषतश्चास्य — d) G1 स्थित — e) G1 भयान्द्रौणि — f) K8 मृत्यु K6 T G1 2 चैतद् (for चेदम्)

17 K4 6 om $17^{abcde}$ (cf v l 13) Ñ1 missing (cf v l 16) — a) K3 तच्च दिव्यम्, K8 स तं दीनम्, D8 स तद्दिनम्, M1–3 स तं दिव्यम् Dn2 स तद्दिव्य स दीनात्मा — b) K3 पापात्मास्त्रम् — After $17^{b}$, Dn2 ins

61* प्रधक्ष्यन्निव कोपेन त्रीणि परममन्युमान् ।

After $17^{b}$, D8 reads $18^{a}$, repeating it in its proper place — Ś1 K1 om $17^{cdef}$ — c) Ś2 शरेषीकां; K2 5 T G1 2 शरैषीका, D1 2 (both before corr) स चैषीकं; D4 स चैषीको, M2–4 शरैषीकान् M1 जग्राह चास्त्रानैषीकान् — e) T1 पराम् (for स ताम्) T G1 2 M आस्थाय (for आसाद्य) — f) K2 4 6 इषीकास्त्रम् (for दिव्यमस्त्रम्) K2 4 6 Dn2 M उदीरयन्; K6 Dn1 उदैरयत्, B1–3 अधारयत्, G2 उदैरवत्

18 Ñ1 missing (cf v l 16) — b) K2 4 6 B (except B1 4) Dn1 D1 2 दिव्यायुधवरान्स्थितान्; K8 दिव्यायुधरयस्थितान् — c) = 1 2 $185^{c}$ Cv as in text — d) K3 विसृजन् (for व्यसृजद्) T G1 2 M1 2 वाचमुत्सृज्य दारुणा (T1 G1 M2 °णं)

19 Ñ1 missing (cf v l 16) — a) K1 T2 राजशार्दूल, Dn2 रथशार्दूल — b) K4 द्रोणपुत्र — c) K5 °प्रमोहार्थे; Dn2 प्रमोदार्थं — d) K2 4 6 इषी (K2 ईषि°, K6 ऐषी)कास्त्र, K5 स तदस्त्र, T1 अथास्त्रं प्र (for तदस्त्रं प्र)

20 Ñ1 missing (cf v l 16) — a) K2 ईषिकायां, M1 ऋषीकाया — c) Ś2 प्राधक्ष्यन्, K2–4 6 B6 Dn D6 8 प्रधक्षन् K1 तान् (for त्रीन्) T G1 2 M निर्दहन्निव त्रिवर्मास्त्रीन् — d) D8 लोकांतकयमोपम°, T G1 2 लोकान्लोकान्तकोपम (T2 °मान्); M1 2 लोकान्कालांतकोपम (M2 °म°), M3 4 लोकान्कालयमोपम

Colophon missing in Ñ1 — *Sub-parvan* All MSS (Ñ1 missing) ऐषी(or षि)क — *Adhy name* Ś1 K1 ऐषी(K1 °षि)कास्त्रोत्सर्ग°, Ś2 अस्त्रोत्सर्ग, K3 ऐषीकास्त्रे, K4 अस्त्रविसर्ग°, K5 ऐषीकोत्सर्ग°, T G1 2 ब्रह्मास्त्रप्रयोग°, M1 2 4 अश्वत्थामा(M2 °म)दर्शन — *Adhy no* (figures, words or both) Ś2 D2 13, Dn T G1 2 M 4

## 14

☞ Ñ1 is missing for this adhy (cf v l 10 13 16)

1 a) K2 4 T G1 2 M इगितेन तु — b) D1 2 तद्; T G2 तस्य (for तम्) G1 तस्याभिप्रायमोहित

द्रोणोपदिष्टं तस्यायं कालः संप्रति पाण्डव ॥ २
आवृणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ३
केशवेनैवमुक्तस्तु पाण्डवः परवीरहा ।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ ४
पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने ।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परंतपः ॥ ५
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ६
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना ।
प्रजज्वाल महार्चिष्मद्युगान्तानलसंनिभम् ॥ ७
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः ।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ८
निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः ।
महद्भयं च भूतानां सर्वेषां समजायत ॥ ९
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् ।
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ १०
ते अस्त्रे तेजसा लोकांस्तापयन्ती व्यवस्थिते ।
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ ११
नारदः स च धर्मात्मा भरतानां पितामहः ।
उभौ शमयितुं वीरौ भारद्वाजधनंजयौ ॥ १२
तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १३
तदन्तरमनाधृष्यावुपगम्य यशस्विनौ ।

— $^{c}$) Ś2 Dn1 द्रौणिर्बुद्ध्वा, G1 द्रौणेर्ज्ञात्वा — $^{d}$) K3 अर्जुन समभाषत, T G1 2 M अभ्यभाषत फल्गुन

2 G1 om 2 Before 2, K3 ins श्रीकृष्ण उ° — $^{a}$) T G2 यथैतद्, M1 यत्त्वेकद्, M2-4 यत्त्वेतद् (for यद्दिव्यम्) — $^{b}$) K5 यदि (for ह्रदि) T G2 M ह्यस्त्र परिवर्तते — $^{c}$) K1 द्रोणोपदिष्टार्थस्याय, M1 °दिष्टस्तस्याय — $^{d}$) K1 M2-4 सप्रति वर्तते, T G2 M1 सपरिवर्तते

3 $^{b}$) K1 पाडव (for भारत) — $^{c}$) Ś K5 Dn2 विसृज्यैतद्, K3 विसृजस्व — $^{d}$) M अस्त्रस्यास्य Ś1 °विदा वर, B3 Dn2 M3 4 निवारणे (for °रणम्)

4 $^{a}$) K3.6 B Dn D1-4 6 8 उक्तो(D6 °क्ते)थ — $^{b}$) M1 2 बीभत्सु (for पाण्डव) — $^{c}$) T G1 2 M रथादवातरत् (by transp ) Ś2 शीघ्र (for तूर्णं)

5 $^{a}$) Ś1 °पुत्रेण — $^{b}$) K1 तदनन्तरम् K5 T G2 M आत्मन — $^{c}$) T G1 2 M भ्रातॄणां चैव सर्वेषा (T1 भ्रातृणामात्मनश्चैव) — $^{d}$) K5 परतप

6 $^{a}$) K2 3 6 T G1 2 M3 4 दै(K6 दे)वतेभ्यो T G1 2 M नमस्कृत्वा — $^{d}$) D6 शम्यताम्

7 $^{a}$) T G2 तदस्त्रमस्त्र सहसा — $^{b}$) K3 4 गाडीव K1 3 G1 धन्विना — $^{c}$) K5 D6 महार्चिष्मन्, D1 2 तथार्चिष्मद् — $^{d}$) K2 युगान्तानिळ°; K3 T G1 2 M °नलवर्चस

8 $^{b}$) Dn2 तिग्मतेजसा — $^{c}$) T1 G1 2 M जज्वाल सुमहा(T1 M1 °हज् )ज्वाल — $^{d}$) Ś2 K1 3 D6 °सनिभ, T G1 2 M °सयुत

9 $^{b}$) M च सर्वश° (for सहस्रश°)

10 $^{a}$) Dn1 घोर (for व्योम) — $^{b}$) M3 4 माला समाकुल — $^{c}$) G2 महीं· K5 सर्वा, Dn2 कृत्स्न

11 $^{a}$) K2-4 6 T G1 2 M तावस्त्रतेजसा, K5 ते चास्त्रे तेजसा, B1 3 ते अस्त्रतेजसी, B2 4 5 Dn D1-4 6 8 ते स्वस्त्रतेजसी — $^{b}$) K2-4 6 D3 तापयतौ व्यवस्थितौ, Dn1 तापयति व्यवस्थिते, Dn2 तापयतो व्यवस्थिता, T G1 2 M त्रासयन्तौ ततस्थितौ (G1 तरस्विनौ, M1. 2 तपस्विनौ, M3 4 अवस्थितौ) — $^{c}$) K2 D4 T1 M1 महर्षि· Dn1 सहितास्तत्र — $^{d}$) Dn1 त्रासयामासतुस्

12 $^{a}$) K1 च स (by transp ), K2 4 6 B Dn D1-4 6 8 T G1. 2 सर्वे ; K3 स तु K3 6 B Dn D1-4 6 8 भूतात्मा (for धर्मात्मा) — $^{b}$) K3 Dn1 D1 2 T M (except M2) भारताना K3 D3 पितामह — $^{c}$) K·4 शाम — After 12, T G2 M read 16 (T G2 repeating it at its proper place )

13 Before 13, G2 M ins वैश — $^{a}$) T G1 2 तौ दृष्ट्वा, M इत्युक्त्वा (for तौ मुनी) — $^{b}$) K6 °हिते रतौ — K1 om 13$^{c}$-14$^{d}$

14 K1 om 14 (cf v 1 13) M reads 14,

आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १४
प्राणभृद्भिरनाधृष्यौ देवदानवसंमतौ ।
अस्त्रतेजः शमयितुं लोकाना हितकाम्यया ॥ १५

ऋषी ऊचतुः ।
नानाशस्त्रविदः पूर्वे येऽप्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथंचन ॥ १६

इति श्रीमहाभारते सौप्तिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## १५

वैशंपायन उवाच ।
दृष्ट्वैव नरशार्दूलस्तावग्निसमतेजसौ ।
संजहार शरं दिव्यं त्वरमाणो धनंजयः ॥ १
उवाच वदतां श्रेष्ठस्तावृषी प्राञ्जलिस्तदा ।
प्रयुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २
संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः ।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३
अत्र यद्धितमस्माकं लोकाना चैव सर्वथा ।

---

after the ref, before 10 15 1 — [a]) Ca d सद न्तरम् (as in text) Ś2 K8 अनाधृष्यम्, K4 अना धृष्या, B Dn D1-4 8 अथाधृ(D8 °घृ)ष्याव्, D6 अथा धृष्याद्, T1 अनाधृष्य — [b]) K2 8 Dn D8 4 6 उपा गम्य — [c]) B1 2 गुप्ताव् (for आस्ताम्) Dn2 मुनि (for ऋषि)

15 [a]) D1 (*sup lin* as in text) 2 8 प्राणधृग्भिर् M4 अनाधृष्यौ — [b]) K2 -सगतौ, G1 -सत्तमौ (for -समतौ) T G2 M देवानामपि समतौ (G2 सत्तमौ, M4 समता) — [d]) D8 सित (for हित)

16 T G2 (all first time) M read 16 after 12 K6 B1 Dn2 T1 G1 M2-4 ऋषिरुवाच (resp ऋषिर्) — [a]) Dn2 शास्त्रविद' K8 पूर्वं, T G1 2 शूरा (for पूर्वे) M महास्त्रविदुषो येन्ये — [b]) M समतीता (for येऽप्य) — After 16[ab], G1 ins

62* सजहार इ [शर] दिव्य त्वरमाणो महारथा [थ] ।

— [d]) K2 D2 6 प्रमुक्त —After 16, K2-6 Dn D1-4 6 ins

63* किमिद साहस वीरौ कृतवन्तौ महात्ययम् ।

[K6 किमिदौ D4 6 साहसौ K2 महारथौ, K6 D4 महानय, D1-3 6 महाभयौ ]

Colophon om. in Ś K1 4 6 —*Sub-parvan* K2 3 5 B Dn D1-4 6 8 T G1 2 M ऐषी (or °षि )क — *Adhy name* T G1 2 व्यासनारदसमागम', M3 4 व्यासनारददर्शनं — *Adhy no* (figures, words or both) Dn T G1 2 M 5

### 15

☞ St 10 15 1[a]-22[b] are missing in Ñ1 (cf v l 10 13 16)

1 After the ref, M reads 10 14 14 — [a]) K5 6 B Dn D1-4 6 8 नरशार्दूल; T G1 2 M मुनिशार्दूलौ — After 1[ab], T G1 2 M ins

64* गाण्डीवधन्वा सचिन्त्य प्राप्तकाल महारथ' ।

— [d]) K4 त्वरमाणौ T G2 महारथ' (for धनजय )

2 Ñ1 missing (cf v l 1) — [a]) K2-4 T G1 2 M च नरश्रेष्ठ', K5 सदता श्रेष्ट, K6 Dn2 D4 6 8 भरतश्रेष्ठस्, B Dn1 D1-8 भरतश्रेष्ठ, T1 वचनं श्रेष्ठ', — [b]) K3 4 6 तत' (for तदा) T G1 2 M प्राजलि स्तावुभावृषी — [c]) B1 2 4 Dn1 D1-8 प्रमुक्तम् — [d]) Dn1 शम्यताम् Ś1 इह (for इति) D6 खे, D8 षे (for वै)

3 Ñ1 missing (cf v l 1) — [a]) K2 M4 स ह (M4 ह्र)ते — [b]) D6 M2 अस्मान् (for अस्मान्) Ś1 K1 8 विशेषत' — [c]) T G2 विप्र (for द्रौणि) — [d]) K2 Dn1 प्रधक्षति; Dn2 क्षीति, D6 क्षति; D8 क्ष्यति (for क्ष्यति) K8 प्रधक्ष्य शस्त्रतेजसा

4 Ñ1 missing (cf v l 1) — [a]) K5 B Dn

भवन्तौ देवसंकाशौ तथा संहर्तुमर्हतः ॥ ४
इत्युक्त्वा संजहारास्त्रं पुनरेव धनंजयः ।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ ५
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे ।
न शक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ६
ब्रह्मतेजोभवं तद्धि विसृष्टमकृतात्मना ।
न शक्यमावर्तयितुं ब्रह्मचारिव्रतादृते ॥ ७
अचीर्णब्रह्मचर्यो यः सृष्ट्वावर्तयते पुनः ।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ८
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत् ।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः ।
गुरुवर्ती च तेनास्त्रं संजहारार्जुनः पुनः ॥ १०
द्रौणिरप्यथ संप्रेक्ष्य तावृषी पुरतः स्थितौ ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमाहवे ॥ ११
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन्द्वैपायनमभाषत ॥ १२
उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना ।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १३
अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।

---

D1–4 6 8 यदत्र (by transp), K6 अस्त्र यद् —b) K3 4 6 T1 M सर्वश —c) K2 दैव —d) K2 यथा, T1 तदा (for तथा) K2 8 शाम्यतुम्, K4 सयतुम्, K5 शासितुम्, K6 सायतुम्, Ñ1 B Dn1 D1 2 4 8 T G2 M समतुम्, Dn2 शमितुम्, D8 सस्मर्तुम्, D6 शासितुम् K2 अर्हथा, K3–5 Dn2 D4 6 T2 G2 M3 अर्हथ, K6 G1 M1 2 अर्हथ, B2 Dn1 M4 अर्हत

5 Ñ1 missing (cf v l 1) —b) T G1 2 M पाडव स (M1 2 °वस्तु) (for पुनरेव) —c) K4 दुस्तरस्, M5 दुष्कर —d) K2 सवासवै, T G1. 2 M च सयुगे

6 Ñ1 missing (cf v l 1) —a) T G1 2 प्रयुक्तस्य, M प्रसृष्टस्य M1 2 सतस्, M3 4 ततस् (for रणे) B1 2 क्रोधाद् (for तस्य) —b) K4 परमास्त्रेण K1–4 B3 D1 2 4 T G1 2 सयुगे, B1 समुखे (for सग्रहे) —c) K3 B Dn D1–4 6 8 T G1 2 M4 अशक्त —d) B1 2 शचीपति (B2 °ते) (for शतक्रतु)

7 Ñ1 missing (cf v l 1) —a) B1 2 T G2 M1 2 °तेजोद्भवं, Dn2 °तेजोभयं, M3 4 °तेजो महत् —b) Ś1 K1 प्रयुक्तम्, T1 G1 M3 4 प्रसृष्टम्, M1. 2 संसृष्टम् —c) K3 न शक्तिर्, M4 नाशक्यम् Ca d आवर्त (as in text) —d) K2 3 M4 ब्रह्मचारी, M1 ब्रह्मचर्य

8 Ñ1 missing (cf v l 1) —a) D2 (before corr) G1 आचीर्ण, M1 अचीर्ण K3 व्रतचर्योय —b) G1 पृष्ट्वा, M2 स्पृष्ट्वा —c) M4 तदस्त्र

9 Ñ1 missing (cf v l 1) —a) K4 6 °चारि व्रती, M1 °चर्यव्रती, M3 °चारिव्रते K3 वापि, D6 चारी (for चापि) —b) K2 D3 दुरवाप्यम्, K3 T2 G1 दुरावापम्, K5 दु प्राप्य सम्, K6 दुरवापिम्, M4 दुरावाप्यम् B1–3 च (for तत्) Dn1 दु खाय मम वाप्यतत् (sic), Dn2 दुरवाक्यमयाप्यतत् (sic) —c) K1 परमव्यसने चापि, K5 °मास्त्र समर्थोपि —d) T G1 2 M नार्जुनस्ताद्विमुचति (M3 4 °व्यमुचते)

10 Ñ1 missing (cf v l 1) —a) T G1 2 सत्य व्रतपर शूरो, M3 तस्य व्रतं धनुः शूरो —b) Ś1 K1 स (for च) —c) K2 गुरुवर्ति, K4 गुरूवर्ती Ca d cite तेन (as in text)

11 Ñ1 missing (cf v l 1) —a) K6 [अ]पशी मेक्ष्य, M1 [अ]पि संप्रेक्ष्य, M3–4 [अ]भिस (for [अ]थ स) —b) K3 पुनरास्थितौ T G1 2 M3 4 सा( G1 अ, M3 4 [अ]था )तरा तावृषी स्थितौ, M1 2 अस्त्रान्तर गतावृषी —d) B Dn D1–4 6 8 ओजसा (for आहवे)

12 Ñ1 missing (cf v l 1) —a) K1 °सहारी; D8 प्रहिसहारे —b) K4 परमास्त्रेण —c) G1 द्रात मना (for दीन) K1 कृष्णद्वैपायणं राजन् —d) K2 द्वीपायनम् K1 अथैन समभाषत

13 Ñ1 missing (cf v l 1) —a) Dn1 °व्यस नार्थेन —b) K4 त्राणत्राणम्, D6 प्राणात्राणम् K1 T2 G1 2 M (except M2) अभीप्सता, K6 अभीपुणा, T1 अभीप्सया —c) D4 5 ममैतद्, T G1 2 M मये दम् (for मयैतद्) —d) K3 मुग्ने (for मुने)

14 Ñ1 missing (cf v l 1) —a) K2 तु (for

मिथ्याचारेण भगवन्भीमसेनेन संयुगे ॥ १४
अतः सृष्टमिदं ब्रह्मन्मयास्त्रमकृतात्मना ।
तस्य भूयोऽद्य संहारं कर्तुं नाहमिहोत्सहे ॥ १५
विसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १६
तदिदं पाण्डवेयानामन्तकायाभिसंहितम् ।
अद्य पाण्डुसुतान्सर्वाञ्जीविताद्भ्रंशयिष्यति ॥ १७
कृतं पापमिदं ब्रह्मन्रोषाविष्टेन चेतसा ।
वधमाशास्य पार्थानां मयास्त्रं सृजता रणे ॥ १८

व्यास उवाच ।

अस्त्रं ब्रह्मशिरस्तात विद्वान्पार्थो धनंजयः ।
उत्सृष्टवान्न रोषेण न वधाय तवाहवे ॥ १९
अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता ।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥ २०
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव ।
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनंजयः ॥ २१
एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः ।
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ २२
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते ।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ २३
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः ।
न विहन्त्येतदस्त्रं ते प्रजाहितचिकीर्षया ॥ २४

---

च) K₂ ₄ ₆ येन (for ऽनेन) — $^{b}$) K₈ D₆ धार्तराष्ट्र (for °ष्ट्रं) — $^{c}$) K₄ ₆ Dn₁ भगवान्

15 Ñ₁ missing (cf v l 1) — $^{a}$) K₁ B₈ तत Ca युक्त, Cd सृष्टम् (as in text) — $^{b}$) Ca प्रकृता त्मना, Cd अकृतात्मना (as in text) — $^{c}$) K₈ भूयोथ; T G₁ ₂ भूयोपि

16 Ñ₁ missing (cf v l 1) — $^{a}$) B₄ D₁₋₈ निसृष्ट — $^{d}$) Ś₁ K₁ वह्नितेजोभि , K₆ वह्निना चानु , G₁ यांसि(sic)तेजोनु , M ब्रह्मतेजोनु°

17 Ñ₁ missing (cf v l 1) — $^{a}$) Ś₂ तदद्य T G₁, ₂ M पांडुपुत्राणाम् — $^{b}$) T G₁ ₂ M₁ ₂ अता चैव; M₃ ₄ अताय हि K₃ Dn₂ [अ]भिसंधितं, K₆ [उ]पसंहितं, T G₁ ₂ M सुसंहितं — $^{d}$) K₈ ग्रसयिष्यति

18 Ñ₁ missing (cf. v l. 1) — $^{b}$) Ś₂ कोपा विष्टेन K₂ D₁ ₆ तेजसा T G₁, ₂ M क्रोधेनाविष्टचेतसा (T₁ °तेजसा) — $^{c}$) M₁ ₂ वधाभिसंध्या पार्थाना, M₃ ₄ वध सधाय पा — $^{d}$) T G₁ ₂ M प्रभो (for रणे) K₈ मयास्त्र प्रति हा रणे

19 Ñ₁ missing (cf v l. 1) — $^{a}$) Ś₂ °शिरा स्तात; K₁ शिरो विद्वास्, K₆ °शिरस्तावद्, Dn₂ °शिरो नाम — $^{b}$) K₁ सात; K₈ वेत्ति (for विद्वान्) M₃, ₄ जितेंद्रिय° (for धनंजय°) — $^{c}$) T G₁ ₂ M₃ ₄ अहिंसार्थं; M₁, ₂ न हिंसार्थं (for न रोषेण) — $^{d}$) K₂ ₄ B Dn₂ D₁₋₄ ₆ ₈ न नाशाय, K₈ T G₁ ₂ M न रोषेण; K₆ Dn₁ नानाशाय K₈ महाहवे, Dn₂ सदाहवे

20 Ñ₁ missing (cf v l 1) — $^{a}$) K₁ अस्त्रमत्रेण — $^{b}$) G₁ सदा (for तव) K₁ सशामयिप्यता, K₂ सशमयिष्यय, K₆ D₁ ₂ °ष्यति, M₁ स शमयिष्यता — $^{d}$) Dn₁ पुनश्चाथाभिसहृत

21 Ñ₁ missing (cf v l 1) — $^{a}$) K₁₋₆ [अ]वा प्यैतद् K₈ Dn₁ ब्रह्मास्त्रमथ वाप्येतद्, Dn₂ स्त्रभिदमप्ये तद् — $^{c}$) K₈ क्षत्रधर्मं, T₁ °धर्मो T G₂ M₃ ₄ महाबुद्धिर् — B₅ reads 21$^{d}$–24$^{a}$ in marg

22 Ñ₁ om 22$^{ab}$ (cf v l. 1) B₅ reads 22 in marg (cf v l 21) — $^{a}$) D₆ साधो, T G₁ ₂ M तात K₈ एवं धृतिमनुसस्वा (sic) — $^{b}$) सर्वार्थ° K₂ ₄ T G₁ ₂ M₃ ₄ तत (for सत°) K₈ सर्वास्त्रकुशलो ह्यसि — $^{c}$) K₈ आचार्यपुत्र कस्माच्च — $^{d}$) T G₁ ₂ M अद्य (for अस्य)

23 B₅ reads 23 in marg (cf v l 21) — $^{a}$) K₈ °शिरा D₁ ₂ G₁ यस्य — $^{b}$) Ś₂ K₂ ₆ Ñ₁ वाध्य ते, K₄ D₁ ₂ G₁ बध्यते — K₆ reads 23$^{c}$–24$^{b}$ in marg — $^{d}$) K₈ तद्राष्ट्रे नाभिवर्षसि

24 G₁ M om 24 K₆ reads 24$^{ab}$ in marg (cf v l 23) B₅ reads 24$^{a}$ in marg (cf v l 21) — $^{a}$) Ñ₁ Dn₂ D₁₋₄ ₆ T G₂ एतदस्त्रं B₅ महाबाहो — $^{c}$) B₅ D₄ ₈ तु (for ते) Ś₂ K₈ न विहन्त्येतदस्त्र तु (K₈ ते), K₆ ₆ B₃ D₈ ₆ न विहन्यासदस्त्रं तु (B₃ ते), Ñ₁ B₄ T G₂ न हि हन्येत्तदस्त्रं ते (B₄ तु), B₁ ₂ न हि हन्येतदस्त्र तु, Dn₂ विनिहन्य तदस्त्र तु, D₁ ₂ न विंदते तदस्त्र तु — $^{d}$) Dn₂ चिकीर्षता

पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः ।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज ॥ २५
अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः ।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६
मणिं चैतं प्रयच्छैभ्यो यस्ते शिरसि तिष्ठति ।
एतदादाय ते प्राणान्प्रतिदास्यन्ति पाण्डवाः ॥ २७

द्रौणिरुवाच ।

पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम् ।
अवाप्तानीह तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथंचन ॥ २९
न च रक्षोगणभयं न तस्करभयं तथा ।
एवंवीर्यो मणिरयं न मे त्याज्यः कथंचन ॥ ३०
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमिषीका निपतिष्यति ।
गर्भेषु पाण्डवेयानाममोघं चैतदुद्यतम् ॥ ३१

---

25 $^{a}$) S K$_{1\,8\,5}$ Dn$_1$ D$_{1\,2}$ G$_1$ पाडवास्त्र, K$_{2\,4}$ पाडवस्त्व( M$_{1-8}$ तद्राष्ट्र पाडवाश्चैव, M$_4$ पाडवाना च राज्य च —$^{b}$) M$_{1-8}$ सर्वं (for सदा) Ś$_2$ सरक्ष्य एव, K$_{2\,4}$ सरक्षते च Ś$_1$ Ñ$_1$ B$_4$ Dn$_1$ D$_{1-4}$ हि, B$_{1-8\,5}$ Dn$_2$ D$_{6\,8}$ च (for न॰) K$_{8\,6}$ सदा सरक्ष्य( K$_6$ °क्ष )से तत —$^{c}$) K$_8$ तु (for त्वम्) —$^{d}$) K$_8$ ह्यस्त्रम् (for अस्त्रम्) T G$_{1\,2}$ M एतदस्त्र महाभुज ( M °ब्रुत )

26 $^{a}$) Ś$_1$ K$_{1\,5}$ Ñ$_1$ B$_{1\,8}$ अदोषस्, K$_{2-4}$ अद्वेषस (K$_8$ प), Dn$_1$ अशेषस् —$^{b}$) T G$_{1\,2}$ M संतु पार्था अनामया —$^{c}$) B$_8$ च (for हि) K$_8$ राजर्षीन् —$^{d}$) K$_8$ पाडवान्, M$_4$ पाडवे Ś$_2$ अर्हति, K$_{8\,5}$ इच्छसि (for °ति)

27 $^{a}$) Ś$_2$ om च K$_{1\,2\,6}$ Ñ$_1$ B$_{4\,5}$ Dn D$_{1-4\,6\,8}$ चैव, K$_{8.\,5}$ T G$_2$ M$_1$ चैन, G$_1$ चैतत्, M$_{2-4}$ चेम K$_5$ प्रयच्छ त्व, B$_{1-8}$ Dn$_1$ D$_{1-8}$ प्रयच्छाद्य —$^{b}$) K$_1$ वर्तते (for तिष्ठति) —$^{c}$) K$_{2\,4}$ एवम्, K$_{8\,6}$ एनम्, Ñ$_1$ एतम् (for एतद्) T G$_{1,\,2}$ M एव जीवितमादाय —$^{d}$) K$_2$ Ñ$_1$ प्रतियास्यति, T G$_{1\,2}$ M तव यास्यति

28 $^{a}$) K$_8$ पाडवैर्यान्यवाप्नोति, Dn$_2$ पाडवे यानि रत्नानि —$^{b}$) Ś$_1$ K$_1$ यद्वान्यै, Ś$_2$ K$_5$ G$_1$ M$_{2-4}$ यद्वान्यत्, K$_8$ यद्वा तत्, T$_1$ यदन्यत्, T$_2$ G$_2$ यद्य न्यत् (for यच्चान्यत्) K$_6$ Ñ$_1$ T G$_{1\,2}$ M कौरव धन —$^{c}$) K$_{2\,5}$ B Dn$_1$ D$_{1-4\,6\,8}$ अवाप्तमिह, K$_8$ Dn$_2$ अवाप्तानि ह, K$_6$ अवाप्तनीय (sic), Ñ$_1$ अप्राप्तानीह Ś$_1$ K$_1$ यो (for ऽय)

29 $^{a}$) K$_8$ यन्मा वध्य, K$_5$ Dn$_2$ D$_6$ यमवाप्य, Dn$_1$ येन वध्या, D$_{1-8}$ यत्तो (D$_2$ by corr °तो, D$_8$ °धा) वध, T$_1$ G$_1$ यस्माद्बध्य —$^{b}$) Ś$_1$ क्षुधाश्रयात्, K$_1$ °श्रमात्, K$_8$ -क्षुधा भृश, Ñ$_1$ क्षुधाश्रम, T$_1$ -क्षुधाभय —$^{c}$) M$_2$ दानवेभ्योपि K$_8$ दानवेभ्योथ —$^{d}$) K$_8$ यक्षेभ्यो वा, K$_6$ व्यथा च न, G$_1$ नागेभ्यो M$_2$ नागेभ्योपि K$_{2-5}$ Ñ$_1$ T G$_{1\,2}$ M कदाचन

30 Dn$_2$ (hapl) om 30 —$^{b}$) D$_8$ तरक्षु (for तस्कर) K$_5$ तदा —$^{c}$) K$_8$ महामणिर्, M$_1$ मणी रत्न (for मणिरय) —$^{d}$) B$_1$ त्यधि (sic), M$_1$ त्याज्य (for त्याज्य॰) Dn$_1$ न त्याज्यय॰ कथचन (sic)

31 $^{a}$) S$_2$ यस्तु, K$_8$ यत्र Dn$_2$ भगवानाह —$^{c}$) Ñ$_1$ अह मानमिम त्यक्ष्ये —$^{d}$) K$_{2-6}$ Ñ$_1$ B Dn D$_{1\,2\,4\,6}$ T G$_{1\,2}$ M$_{2-4}$ Cv तु, D$_{8\,3}$ तु (for नि) M$_1$ इषीका तु वधिष्यति —$^{e}$) Dn$_2$ D$_6$ गर्भे च; T$_1$ गर्भे तु, M गर्भेस्मिन् T G$_{1\,2}$ M पांडुपुत्राणाम् —$^{f}$) Ś$_2$ K$_{2-6}$ ह्येतद्, Dn$_1$ चेत्तद्, Dn$_2$ वैतुम् (for चैतद्) B$_{2\,4}$ Dn$_1$ D$_{1-4}$ उत्तम (for उद्यतम्) D$_6$ अमाय च तदुच्यते, T G$_{1\,2}$ M$_{1\,2}$ उत्तरायास्तथोदरे, M$_{3\,4}$ इति व्यास सुदुर्मना॰ — After 31, S K Ñ$_1$ B Dn D$_{1-4\,6\,8}$ ins

65* न च शक्तोऽस्मि भगवन्संहर्तुं पुनरुद्यतम् ।
एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहम् ।
न च वाक्य भगवतो न करिष्ये महामुने ।

[ (L 1) Ś$_2$ शक्तो हि, K$_8$ Ñ$_1$ Dn$_2$ D$_6$ शक्नोमि N$_2$ आहर्तुं (for संहर्तुं) — (L 2) K$_8$ एतदर्थम् S K$_{1-4}$ चैतद्, K$_5$ त्वेतत् (for चैव) K$_8$ तद्गर्भे (for गर्भेषु) — (L 3) K$_8$ करिष्येह (for न करिष्ये) K$_6$ निरिष्ये (for क°) ]

On the other hand, T G$_{1\,2}$ M ins after 31

66* प्राह द्रोणसुत तत्र व्यास॰ परमदुर्मना ।

[ M$_{3.\,4}$ सुतस (for -सुत), and नातिहृष्टमना इव (for the post half) ]

32 $^{a}$) Dn$_2$ D$_6$ एतत् (for एव) M$_{1\,2}$ शूरा (for कुरु) Ś$_2$ चाद्राने, K$_{2\,4}$ D$_4$ चान्या वै, K$_8$ चानां

व्यास उवाच ।
एवं कुरु न चान्या ते बुद्धिः कार्या कदाचन ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३२

वैशंपायन उवाच ।
ततः परममस्त्रं तदश्वत्थामा भृशातुरः ।
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ॥ ३३

इति श्रीमहाभारते सौप्तिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

# १६

वैशंपायन उवाच ।
तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ १
विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
उपप्लव्यगतां दृष्ट्वा व्रतवान्ब्राह्मणोऽब्रवीत् ॥ २
परिक्षीणेषु कुरुषु पुत्रस्तव जनिष्यति ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ३
तस्य तद्वचनं साधोः सत्यमेव भविष्यति ।
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ ४
एवं ब्रुवाणं गोविन्दं सात्वतप्रवरं तदा ।

ते, $Ñ_1$ B $Dn_1$ $D_{1-3.8}$ चान्या तु, T $G_{1.2}$ $M_{3.4}$ चान्यत्र, $M_{1.2}$ चाप्यत्र —$^b$) $K_8$ बुद्धिं $K_{3-4}$ B Dn $D_{1-4.8}$ त्वयानघ, $K_6$ T $G_{1.2}$ M कथंचन —$^c$) $T_1$ $M_{3.4}$ गर्भे तु —$^d$) $K_{1.3.6}$ $Dn_2$ विसृजैतद्, $B_3$ विसृज्य तद् $Ś_1$ $K_1$ उपावस, $T_2$ उपाहर, $M_2$ उपारम

33 Ś K om. the ref — After the ref., T $G_{1.2}$ M ins.

67* तमुवाच हृषीकेशः पाण्डवानां हिते रतः ।
भविष्यमेकमुत्सृज्य गर्भेष्वस्त्रं निपात्यताम् ।
अहमेकं ददाम्येषां पिण्डदं कीर्तिवर्धनम् ।
राजर्षिं पुण्यकर्माणमनेकक्रतुयाजिनम् ।
एवं कुरु न चान्या ते बुद्धिः कार्या कथंचन । [5]
मा गर्भात्पाण्डवेयानां कृत्वा पातं विनङ्क्ष्यति ।

[(L. 5) = (var.) $32^{ab}$]

— After 67*, T $G_{1.2}$ M read 10. 16. 5–8. T $G_{1.2}$ M read 33 after 69* (cf. v. l. 10. 16. 8). —$^a$) $G_1$ परमशस्त्रं $Ś_1$ $M_{1.2}$ तम्; $B_3$ च, $Ñ_1$ $B_{4.5}$ Dn $D_{1-4.6.8}$ T $G_{1.2}$ तु (for तद्). $K_1$ प्रतिसंहरणाशक्तेर् —$^b$) $K_{3-4.6}$ $Ñ_1$ B Dn $D_{1-4.6.8}$ T $G_{1.2}$ M द्रौणिरु(or °रू)त्तमा(K$_3$ °मधा, $G_1$ $M_2$ °त्तमा)हवे —$^c$) $K_3$ द्वीपा° T $G_{1.2}$ M द्वैपायनमनादृत्य —$^d$) M गर्भे तु

Colophon — *Sub-parvan*: All MSS ऐषी(or °षि)क. — *Adhy. name*: Ś $K_5$ अस्त्रपातन, $K_1$ अस्त्रदर्शन, $K_{2.4}$ अस्त्रप्रतिसंहार, $M_{1.2}$ इषीकास्त्रमोक्षण, $M_{3.4}$ अस्त्रप्रमोक्षण. — *Adhy. no.* (figures, words or both): $Ś_2$ 14, $Ñ_1$ 5, T $G_{1.2}$ M 6.

## 16

1 $^a$) $K_3$ यदाज्ञाय —$^c$) $K_3$ दह्यमानम्, $Ñ_1$ ह्रेष्यमाण, $Dn_1$ $D_4$ हृष्यमाणम् —$^d$) $Ś_2$ द्रौणिः T $G_{1.2}$ M प्रत्यादिशत्

2 Before 2, $Dn_1$ ins. श्रीकृष्ण उवाच. —$^a$) $K_4$ $Dn_2$ सुता $K_6$ $D_4$ पूर्वा; $D_6$ सर्वे —$^b$) $K_4$ $Dn_2$ स्नुषा, $M_4$ सुता $K_{1.2.6}$ $T_1$ धन्विन —$^c$) T $G_{1.2}$ $M_{2-4}$ उपप्लाव्य —$^d$) T $G_2$ ऋतवाग्, $G_1$ मितवाग्, M भावि यद् (for व्रतवान्)

3 $^b$) $K_{1.2.4.6}$ B $Dn_1$ $D_{1-4.8}$ भविष्यति, $K_3$ $D_6$ T $G_{1.2}$ M जनिष्यते — $Ś_1$ $K_{1.6}$ om. (hapl.) $3^c$–$4^b$. $B_{1.2.4}$ $D_{4.8}$ om. (hapl.) $3^{cd}$. —$^c$) $Ñ_1$ एव तस्य, $M_{1.2}$ तेनास्य च (for एतदस्य). $K_{2.4}$ Dn परिक्षित; $G_1$ $M_{1.2}$ परीक्षित्त्व —$^d$) $Ś_2$ गर्भस्थस्तु

4 $Ś_1$ $K_{1.2.6}$ om. $4^{ab}$ (cf. v. l. 3). —$^a$) $M_{3.4}$ साधो —$^b$) $K_4$ $Ñ_1$ $B_{1-4}$ Dn $D_{1-4.6.8}$ एतद् (for एव) —$^c$) $K_2$ $D_{6.8}$ $T_2$ $G_{1.2}$ $M_{2-4}$ परीक्षिद् $Ś_1$ ह्येष, $Ñ_1$ ह्येषु, T $G_{1.2}$ $M_{1-3}$ [ए]तेषां, $M_4$ तेषां

5 T $G_{1.2}$ M read 5–8 after 67*. —$^b$) $K_{2-4.6}$

द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ॥ ५
नैतदेवं यथात्थ त्वं पक्षपातेन केशव ।
वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ॥ ६
पतिष्यत्येतदस्त्रं हि गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यां त्वं रक्षितुमिच्छसि ॥ ७

वासुदेव उवाच ।

अमोघः परमास्त्रस्य पातस्तस्य भविष्यति ।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ८
त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः ।
असकृत्पापकर्माणं बालजीवितघातकम् ॥ ९
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ।
अप्राप्नुवन्क्कचित्कांचित्संविदं जातु केनचित् ॥ १०
निर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि ।
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ॥ ११
पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ।
विचरिष्यसि पापात्मन्सर्वव्याधिसमन्वितः ॥ १२
वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च ।

---

Ñ1 B (except B8) Dn D8 4 6 8 सात्वतां (for ॰त) T G1 2 M ऋषभ सर्वसात्वता —c) K1 Ñ1 T G1 2 M8 4 परमसक्रुद्ध

6 For sequence in T G1 2 M, cf v l 5 —a) Ś2 नैतदेन, K8 ॰देव M8 सथात्थ —b) K8 किंचन (for केशव) M1 परमास्त्र भविष्यति — After 6ab, M1 reads 68*, om 6c–8b —c) T G1 2 M (M1 om) वचनात् —d) K2 4 नेद, T2 G1 2 M2–4 तव (for न च) K1 5 D4 तद्वाक्यम्, G1 वक्तु न च (for मद्वाक्यम्)

7 For sequence in T G1 2 M, cf v l. 5 — M1 om 7 (cf v l 6) —a) Ś2 K8 6 पतिष्यते (for ॰ति) Ś2 K1 3 5 6 B Dn D1–4 6 8 T2 G1 2 तदस्त्र (for [ए]त॰) T G1 2 M2–4 वै (for हि) —b) K1 2 4 6 मयोदित —c) K8 ॰दुहिता K2 4 6 कथं विराटदुहितु —d) Ś2 B Dn D1–8 8 T2 G2 M8 4 य त्व, K2 4 6 कृष्ण, K5 या हि, Ñ1 या तु, T1 G1 यत्त्वं Dn2 D4 6 अर्हसि (for इच्छसि)

8 For sequence in T G1 2 M, cf v l 5 — M1 om 8ab (cf v l. 6) Ś1 K1 6 श्री(K6 om श्री)कृष्ण, B Dn D1–4 6 8 श्री(B1 3 D6 8 om श्री)भगवान्॰, G1 व्यास (sic) —b) K1 2 4 6 M2–4 पातस्तव, K5 घातस्तव, Ñ1 मातुस्तस्य, T1 पातस्त्वय — After 8ab, K8 reads 9ab, while T G1 2 M ins after 8ab (M1, after 6ab)

68* अभिमन्योः सुजैषीका गर्भस्थ॰ शाम्यता शिशु ।
अहमेत मृतं जात जीवयिष्यामि बालकम् ।

—c) D6 स तु, M4 सत्य (for स तु) Ñ1 गर्भो मृते, D1 2 गर्भमृतो, D6 गर्भो सृतो T1 बालो, M1 दीर्घं (for जातो) —d) K1 ध्रुवमायुर्, M1 परमायुर् — After 8, T G1 2 M ins

69* इत्युक्तः प्रत्युवाचेदं द्रोणपुत्र॰ स्मयन्निव ।
यद्यस्त्रदग्ध गोविन्द जीवयस्येवमस्त्विति ।

— After 69*, T G1 2 M read 10 15 33

9 K8 reads 9ab after 8ab —a) Ś2 त्व तु, K4 त्वा नु, D6 त्वा नु, D8 त्वा च B5 पाप —b) K5 आहु॰ (for विदु॰) — After 9ab, B1 reads 10ab —d) T1 वाल (for बाल) B1 5 ॰घातिन, Dn1 घातिक, T G1 2 M कामुक

10 B1 reads 10ab after 9ab —a) G1 त्व तसाद् (by transp) —b) K2 4 सत्वर (for कर्मण) —d) D6 महीसिता —e) Ś2 K2 अनाप्नुवन्, K1 3 D8 अवाप्नुवन्, T G1 2 लभमान॰, M1 अलमान॰, M2–4 अलभान K5 कुतां (for क्कचित्) K8 T G1 2 M1 किंचित् (for कां॰) —f) Ca सविद (as in text), Cd शविल (sic) M1 कस्यचित्

11 a) Ś2 K8 निर्जने नि॰सहायस्त्व, K1 निर्जने नस हायस्त्व, K2 4 6 G2 नो नि॰स॰, D4 ॰नो न सहाय स, T1 ॰नो न सहायस्त्व —b) K3 देशान्वै प्रचरि॰, Dn2 देशान्यपरिचाप्यसि (corrupt), D4 त्व देशान्प्र चरि॰, M2–4 देशान्प्रतिचरि॰ — Dn2 om 11c–12b —c) D3 न च K8 M1 क्षुद्र —d) Ś1 जनमध्ये सु, D6 जलमध्येषु, D8 जनमध्ये तु K2 संस्थिता॰, K8 सस्थित॰, M1 ॰त

12 Dn2 om 12ab (cf v l 11) —a) G1 M पूति (for पूय) Ñ1 त्व (for च) —b) Dn1 दुर्ग॰ K8 काकार, M4 ॰गांधार (for कान्तार॰) K8 —c) Ś1 K1 धर्मात्मन्, B1–4 ॰सश्रित, D8 सशय —d) T G1 2 M चिरमेरो Dn1 D1–3 पापात्मा वसुधरां

कृपाच्छारद्वताद्वीरः सर्वास्त्राण्युपलप्स्यते ॥ १३
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ।
षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति ॥ १४
इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति ।
परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ।
पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ १५

व्यास उवाच ।

यस्मादनादृत्य कृतं त्वयास्मान्कर्म दारुणम् ।
ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् ॥ १६
तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः ।
असंशयं ते तद्भावि क्षुद्रकर्मन्व्रजाश्रितः ॥ १७

अश्वत्थामोवाच ।

सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्वहम् ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ १८

वैशंपायन उवाच ।

प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ १९
पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः ।
कृष्णद्वैपायनं चैव नारदं च महामुनिम् ॥ २०
द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।

---

13 a) K3 परिक्षस्, M1 परीक्षित् —b) K3 देव व्रतम् K6 तु (for च) —c) K3 Ñ1 B Dn D1–4 6 8 T G1 2 M शूर॰ (for धीर॰) —d) Ś1 उपलप्स्यति, Dn1 D8 उपपत्स्यते, Dn2 उपलस्यसे Ś1 K1 सर्वाण्य स्त्राण्यवाप्स्यसि

14 a) K5 सर्वशास्त्राणि —b) K2 ॰धर्मे व्यवस्थित॰, Ñ1 ॰धर्मरत॰ स्थित॰ —c) K3 Dn D4 M षष्टि T1 षष्टिं वर्षसहस्राणि

15 a) K1 T G1 2 M ततश्चोर्ध्वं K1 महाबाहो, K3 T G1 2 महाराज; K4 Ñ1 B1–3 M3 4 महाराज; M1 महाभाग, M2 भाग —b) K3 भविष्यति न संशय॰ —c) K3 परीक्षिद्, D8 परीक्षिन् T G1 2 M पारी(T1 पारि॰, M1 2 4 परी)क्षि(T ॰क्ष)तो नाम नृपो —d) K6 हि; D4 तु, G1 स (for सु) K3 इत्वस्ते वेषु दुर्मते — After 15cd, Ś K Ñ1 B Dn D1–4 6 8 ins

70* अहं तं जीवयिष्यामि दग्धमस्त्राग्नितेजसा ।

[D8 सजीव॰ K3 6 B Dn D1–4 6 8 दग्ध शस्त्राग्नि, Ñ1 दग्ध शस्त्रेण (for दग्धमस्त्राग्नि) ]

—e) M1 2 पश्य त्व (M2 त्व) धर्मवीर्यं मे —f) M1 सत्यस्य वचनाधम

16 K1 om. the ref —a) T1 वचस् (for कृत) Ś1 K1 यदनादृत्य तु कृत —b) M4 दारुण (for णम्) Dn2 त्वयास्मान्कुलदारुण, M3 त्वया कर्म सुदारुणं —c) K2 ब्राह्मणश्च K3 4 चैव, T G1 2 M3 4 चेदं (for चैव) —d) K3 Ñ1 तस्माद् (for य) Ś1 Dn2 व्रतम्, K1 कृतम् (for वृत्तम्) T G1 2 M वृत्तमन्यायवत्तव (T1 वर्तन, T2 G1 2 वर्तिन, M3 ॰वत्तदा)

17 a) K2 4 6 त्वा, Dn2 च (for यद्) —b) Ś1 K1 उक्तवांस्तुत्तम, K6 उत्तमां तु, D6 उक्तवानुत्तमे, D8 नुत्तर —c) K1 तु तद्भावि, K2 4 6 तद्भविता T G1 2 M आलोकात्तव तद्भावि (T2 G2 ॰ति, M4 ॰वी) —d) K3 व्रजेति च, K5 व्रजाम्यत, T G1 2 M व्रजेति ह Ñ1 B Dn D1–3, 6 8 क्षत्रधर्मस्त्वया(Ñ1 ॰र्मं त्वया)श्रित

18 T G1 2 द्रौणि —a) Dn2 D6 सदैव Dn1 भवतां —b) Ś Cv मनुजेषु (for पुरुषेषु) K2 Ñ1 B (except B3) Dn D1–4 6 8 T G1 2 M इह (G2 ॰व) (for अहम्) —c) M1 सत्यवान् K2 भगवन् —d) M1 2 तु (for च)

19 a) M4 प्रादाय K2 M1 च (for [अ]थ) M4 मणिर् —b) T G1 2 M यशस्विना (for महात्मनाम्) — After 19b, K2 ins

71* प्रययौ जाह्नवीकच्छाद्विक्षितास्त्रश्चोत्तरां दिशम् ।

—c) T1 प्रययौ (for जगाम) T G1 2 M प्रेक्षता (for विमनास्). K1 जगाम न्यस्तकवच —d) D6 बल (for वनम्) K3 पश्यतां स महावनं, K5 पश्यता गहनं वनं, K6 पांडवाना प्रपश्यतां, T G1 2 M तपो वनमरिंदम॰ (T1 ॰म)

20 T1 om 20ab —a) T2 G1 2 M पांडवास्तु सदाशार्हा(G2 ॰हारा; M4 ॰चार्हा)स् —b) Ś2 K1 नमस्कृत्य (for पुर) K3 Ñ1 हतद्विप Dn2 पुत्रभृत्य-हतद्विष, T2 G1 2 M तानृषीनभिवाद्य च —c) K4 ॰द्वीपायन —d) D6 वै (for च) Ś1 K1 यशस्विन (for महामुनिम्) T G1 2 M पर्वत नारदं तथा

द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ २१
ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः ।
अभ्ययुः सहदाशार्हाः शिबिरं पुनरेव ह ॥ २२
अवतीर्य रथाभ्यां तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं कृष्णामार्तामार्ततराः स्वयम् ॥ २३
तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् ।
परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ २४
ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तु मणिं दिव्यं वचनं चेदमब्रवीत् ॥ २५
अयं भद्रे तव मणिः पुत्रहन्ता जितः स ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर ॥ २६
प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनः ॥ २७
नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च ।
नैव त्वमपि गोविन्द शममिच्छति राजनि ॥ २८
उक्तवत्यसि धीराणि वाक्यानि पुरुषोत्तमम् ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ २९
हतो दुर्योधनः पापो राज्यस्य परिपन्थकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ ३०
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ ३१
यशोऽस्य पातितं देवि शरीरं त्ववशेषितम् ।

---

21 Ñ1 om 21^cd — c) G1 अभ्ययाचत — d) D4 पाडवानां (for प्रायोपेतां) T G1 2 M यशस्विनीं — Ś2 K2–6 Ñ1 B1 3 4 Dn2 D6 8 T G1 2 M ins an addl colophon after 21 (Ñ1, after 21^ab) [ *Adhy name* K3 अश्वत्थामापराजय, K4 मणिनिर्यातन, K5 मण्यानयन, M (except M3) अश्वत्थामा (M2 °म) शाप (M1 °मगमन) — *Adhy no* (figures, words or both) Ś2 15, Ñ1 6, Dn2 T G1 2 M1–3 7 ]

22 Before 22, all MSS ins वैश° उ° (resp वैशं°) — b) Dn2 सर्वैश्चैर् — D6 om (hapl) from दाशार्हा (in 22^c), up to सह (in 24^d) — c) K1 अभ्ययस्स दहाशार्हा (corrupt), T G1 2 M अभ्य(T1 प्रय)यू राजशार्दूल — d) Ś1 K2–4 Ñ1 B D1–4 8 T1 हि (for ह)

23 D6 om 23 (cf v l 22) — a) K6 D8 रथेभ्यस्तु, T G2 M1 2 [अ]थ रथयोस्, G1 रथास्तेथ, M3 4 [अ]थ रथिनस् — c) D1 and Bom Ed हृष्टाम् (for कृष्णाम्) D2 द्रौपदीं ददृशू रुष्टाम् — d) K1 आर्ततरां, K6 °यश°, Ñ1 °स्वरा

24 D6 om up to सह (cf v l 22) — a) Ñ1 तामभ्येत्य M1 4 निरानदा — b) T G1 2 M परायणा (for -समन्विताम्) — c) T G1 2 M [उ]पतिष्ठति (M1 2 4 °त) — d) K3 पांडवा शोककर्शिता

25 a) Ś2 T1 M4 राजाभ्य°, M1 राज्ञाप्य° — c) Ś2 K2–6 Ñ1 B Dn1 D1–3 8 तं, Dn2 D6 तन्, D1 तां (for तु) Ś1 K2 6 D6 8 देव्यै, K1 4 दिव्यै, K3 दिव्यां, D4 देव्या

26 b) Bom Ed °हतुर् (for °हन्ता) T G1 2 M च (for स) — c) K3 उत्सृज्य शोकमुद्धध्य — d) Bom Ed क्षात्रधर्मम् K3 Dn1 D3 6 °स्मरन्

27 a) Ś1 T1 प्रायेण, K1 प्रेषणे (for प्रयाणे) — b) B1 2 समार्थम् K2 असिते° — c) K6 नक (sic), D6 भीम (for भीरु) — d) B3–5 Dn D1–3 8 °घातिनि, T G1 2 M °सूदने (M °नं)

28 With 28, cf 3 13 112 — a) K3 नैते (for नैव) — b) Ñ1 भ्रातरोपि च, M1–3 °रश्च मे — c) Dn1 न वै K2 4. 6 Ñ1 त्वमसि, K3 B (except B3) D1–4 8 त्वमिति — d) K5 न माम्, B2 समम् K1 इच्छसि Ca d cite शममिच्छति (as in text)

29 ab) K3 T G1 2 M transp धीराणि and वाक्यानि K2 B D1–3 वीराणि, Ñ1 वैराणि, Dn1 तीव्राणि (for धीराणि) Ś1 K1 मधुसूदन, K5 Dn3 T पुरुषोत्तमे; D6 M4 °त्तम — d) Dn3 D3 6 8 स्व G1 2 स्मर्तुम्, D1 2 स्व मतुम् (for संस्मर्तुम्)

30 a) K6 ततो (for हतो) — b) K1 परिपथिन°, Ñ1 B3 4 Dn D1 2 Ca परिपथिक°, B1 2 प्रतिपक्षक°, T G1 2 M परिपथ्य(G1 °बध्य)सौ; Cd °पन्थक° (as in text) — d) Ś2 हि स्फुरतो, Ñ1 विस्फुरता, Dn2 °रितो T G1 2 M प्राशित तु (M हि) रणे मया

31 b) Dn2 नैव (for न स्म) Ś K1 विवक्षितु, Ś1 (sup lin) Dn1 Cd °क्षिता Ñ1 न स्म वाच्य विवक्षित, Cv न स्म वाच्या विवक्षता — c) K1 द्रोणसुतो T G1 2 M जित्वा द्रोणसुतो मुक्तो — d) Ca गौरवेण (as in

